# ॥ आर्यापञ्चदशीस्तोत्रम् ॥

करकलितचापबाणां कल्हाराङ्घ्रिं नमामि कल्याणीम् ।
कंदर्पदर्पजननीं कलुषहरां कामितार्थफलदात्रीम् ॥ १ ॥

एषा स्तोतुम् वाणी नैव समर्था तवेशि महिमानम् ।
शेषोऽप्यब्दसहस्रैः शेषं कृतवान् महेशि तव चरितम् ॥ २ ॥

ईशित्वादिसुपूज्यामिन्दिन्दिरकेशाभारसूल्लसिताम् ।
इन्दीवरदलनयनामीप्सितदात्रीं नमामि शर्वाणीम् ॥ ३ ॥

लसदरुणभानुकोटिद्युतिनिधिमम्बां सुरेन्द्रलक्ष्यपदाम् ।
ललितां नमामि बाले ललितशिवहृदयकमलकलहंसीम् ॥ ४ ॥

ह्रींकारबीजरूपे हिमगिरिकन्ये हरीन्द्रभववन्द्ये ।
हिमकरधवलच्छत्रे हिताय भव नः सदा महाराज्ञि ॥ ५ ॥

हर्षोत्करजनयित्री हसितज्योत्स्ना तवेयमनवद्ये ।
हरगलहालाहलमपि हरति त्रैलोक्यमोहतिमिरं ते ॥ ६ ॥

सकलमनोरथदाने सत्यपि चरणे नतस्य तव निपुणे ।
संसेव्यते सुरतरुः सदाज्ञलोकैर्नु कृच्छ्रफलदाता ॥ ७ ॥

कनकरुचे चटुलगते कठिनस्तनभारनम्रकृशमध्ये ।
कान्ते कङ्कणहस्ते कम्बुग्रीवे नमोऽस्तु ते करुणे ॥ ८ ॥

हरनयनानन्दकरे हराङ्कसंस्थे हरिप्रमुखवन्द्ये ।
हरनटनसाक्षिभूते हरार्धदेहे नमोऽस्तु ते सुकृपे ॥ ९ ॥

लक्ष्मीप्रदकरुणा या लक्ष्मीपतिमल्पमम्ब कर्तुमलम् ।
लक्ष्यम् कुरु मां तस्या लावण्यामृततरङ्गमाले त्वम् ॥ १० ॥

ह्रींकाररत्नगर्भे हेमाचलमन्दरस्तनोल्लसिते ।
हेरम्बप्रियजननि हे वसुधे देहि मे क्षमां नित्यम् ॥ ११ ॥

सत्संप्रदायविदिते सकलागमनिगमसारतत्त्वमयि ।
सावित्र्यर्पय वदने सकलरसाश्रयसुवाक्सुधाधाराम् ॥ १२ ॥

करकङ्कणमणिदिनमणिकरविकसितचरणकमलमकरन्दम् ।
करुणापयोनिधे मे कामाक्षि स्वान्तषट्पदः पिबतु ॥ १३ ॥

लसदिक्षुचापसुमशरलक्षितदोर्वल्लिवीर्यमभयेन ।
लक्षाधिकदैत्यकुलं लवुपटवासं कृतं कथं चित्रम् ॥ १४ ॥

ह्रींकारकेलिभवने हिमकरमौल्यङ्कमञ्जुपर्यङ्के ।
हृदयसरोजे मे वस हृदयानन्दप्रबोधपरहंसि ॥ १५ ॥

आर्यापञ्चदशीं तामार्यां यो भजति शुद्धधीर्नित्यम् ।
भार्ये लक्ष्मीवाण्यौ पर्यातात् तस्य सादरं भवतः ॥ १६ ॥

इत्यानन्दनाथपादपद्मोपजीविना काश्यपगोत्रोत्पन्नेनान्ध्रेण
त्यागराजनाम्ना विरचितमार्यापञ्चदशीस्तोत्रं संपूर्णम्